# KAVIKARPATIKA

BY

VĀDĪNDRA KAVI

*Edited by:*

**SRI V. SUNDARA SARMA,**

AND

**SRI N. S. DEVANATHACHARIAR,**

*Pandits,*

*Saraswathi Mahal Library, Tanjore.*

*Published by:*

**SRI S. GOPALAN, B. A., B. L.,**

*Honorary Secretary,*

FOR THE ADMINISTRATIVE COMMITTEE, T. M. S. S. M. LIBRARY,

TANJORE.

1955

The Journal of The Tanjore Sarasvati Mahal Library Vol. IX, Parts 1, 2 & 3.

॥ श्रीः ॥

# ॥ कविकर्पटिका ॥



श्रीवादीन्द्रकविविरचिता ।



# ॥ सूचना ॥

अस्याः कविकर्पटिकायाश्चतस्रो मातृकास्सन्त्यस्मिन् सरस्वती-महाल् ग्रन्थालये । तासामन्यतमा B. 5010 संख्यायुता प्रकटनाय स्वीकृता "क" संज्ञिता च । अन्यासां तिसृणामपि मातृकास्थानीया B. 4783 संख्याता "ख" संज्ञिता । ते उभे अपि परिशील्य सज्जीकृतमिदं मुद्रणम् ॥

॥ श्रीः ॥

# ॥ प्रास्ताविकम् ॥

—:—

असर्वज्ञजनदुर्लभां काव्यसृष्टिं वदन्त्यभिज्ञाः । अपूर्वां पूर्वजन्मवासनां तत्र कारणीकुर्वन्ति केचित् । परे त्वनुकरणसाध्यां मत्वा पूर्वेषां महाकवीनां रसवन्ति पद्यानि समानार्थानुपूर्वीकैः पदैरनुकुर्वन्तस्तथैव च प्रबोधयन्त्यन्यान् । अपरे च "यमाते"त्यादि-गणविज्ञानेन गुरुलघुविवेकेन च विविधानि छन्दांसि निर्माय तदभ्यासवशात्सुसाध्यां मन्वते कविताम् । एवमनेकविधकविताभ्यासमार्गेषु सत्सु अयमपूर्वतरः परिश्रमः कृतः श्रीमद्वादीन्द्रकविमहाशयेन, यस्येयं निर्मितिः 'कविकर्पटिका' ।

अस्यां कविकर्पटिकायां बहवः पद्यनिर्माणप्रकाराः प्रदर्शिताः । अनेनाहते मार्गे नानुकृतिरथवा गणादिगणनापरिश्रमः । किन्तु पद्यग्रथनानुकूलानि विशिष्टानु-पूर्वीकाणि पदानि प्रतिवृत्तं प्रतिपादं दर्शयति कविः । तादृशानुपूर्वीकपदाभ्यास-वशोत्पन्नश्लोकनिर्माणानुकूलधारावान् पण्डितः अन्यो वा सर्वत्र सर्वदा अनायासेन पद्यं निर्मातुं प्रभवेत् ।

तथैव च प्रतिजानाति कविर्ग्रन्थारम्भे —

"यत्नादिमां कण्ठगतां विधाय श्रुतोपदेशाद्विदितोपदेशः ।
अज्ञातशब्दार्थविनिश्चयोऽपि श्लोकं करोत्येव सभासु शीघ्रम् ॥" इति ।

अत्र ग्रन्थे उदाहरणत्वेन अनुष्टुप्, इन्द्रवज्रा, वंशस्थं, द्रुतविलम्बितं, वसन्ततिलका, मालिनी, शिखरिणी, मन्दाक्रान्ता, शार्दूलविक्रीडितं इति नव वृत्तान्युपात्तानि । पद्य-निर्माणोपयोगिपदप्रदर्शनमेवात्र प्रधानं वस्तु । अर्थविचारस्तु पाठकाधीनः ।

एतद्ग्रन्थोक्तरीत्या उपरिनिर्दिष्टेषु वृत्तेषूदाहरणत्वेनैकैकः श्लोकः प्रदर्श्यते । यथा—

१. अनुष्टुप् — Page No. 3.

कर्पूरपूरनीकाशा कान्तिर्यस्य विलोक्यते ।
चन्द्रोऽयं राजते रम्यो नितान्तं लोचनप्रियः ॥

२. इन्द्रवज्रा — Page No. 8.

धर्मप्रसिद्धः करुणाप्रधानः प्रजासु साधुः प्रथितः पृथिव्याम् ।
सुजातसख्यो विनयादिसिन्धुः जीयाद्भवान्प्रीतिकरो विशुद्धः ॥

३. वंशस्थवृत्तम् — Page No 9.

अनिन्दितेन्दीवरचारुलोचना
वितन्द्रचन्द्राभमुखाम्बुजद्युतिः ।
मृणाळनाळोपमबाहुवल्लरी
जगत्त्रयं मोहयते विलासिनी ॥

४. द्रुतविलम्बितम् — Page No. 10.

विशदशारदवारिदभास्वरं
चरति यस्य यशो भुवनत्रये ।
सकलवत्सलताक्रममन्दिरं
क्षितिपतिस्स सदा भुवि शोभते ॥

५. वसन्ततिलका — Page No. 10.

शोभासमुद्रसुभगो जगतीतलेऽस्मिन्
नीहारपाटनरुचा भुवने निकामम् ।
स्वाचारदाननिरतः प्रतिमः पुराणः
वारीशवाणिविभवैस्सखि मेऽद्य दृष्टः ॥

६. मालिनी — Page No 11.

नवसरसिजजालैस्सन्निभोऽयं सदैव
स्फुरति किरणराशिर्यस्य सम्प्रेक्षणीयः ।
जनपतिरुचिरौघैर्भास्करोऽयं पुरस्ता-
द्धदुदयविनोदो निर्मितोऽयं विधाता ॥

७. शिखरिणी — Page No. 12.

महाशीलः श्लाघ्यो मदनविजयी निर्मलयशाः
स्फुरल्लोलाक्षेपो विगतकलुषस्तत्त्वनिपुणः ।



प्रशस्यस्सर्वेषां जलनिधिसमस्सत्पथरतः
महाशास्त्राभिज्ञो नरपतिरयं सर्वविजयी ॥

८. मन्दाक्रान्ता — Page No. 13.

प्रज्ञागण्यस्सुभगवदनः कीर्तिधौतत्रिलोकः
विश्वप्रेक्ष्यो विनयसहितो नीतिशास्त्रैकवेत्ता ।
सौख्याचारो बहुमतगतिश्चारुलब्धप्रतिष्ठः
दीर्घं जीयाद्गुणगणनिधिस्सर्वलोकोपकारी ॥

९. शार्दूलविक्रीडितम् — Page No 15.

प्रज्ञानां निजभूमिरेष नियतं संरक्तचित्तो जने
चन्द्राकारगुणप्रकाशसुभगो दानेन कर्णोपमः ।
कीर्त्योल्लङ्घितसप्तवारिधिपया विद्याविनोदी स्वयं
शक्त्या निर्जितसारशत्रुनिवहो जीयादयं भूपतिः ॥

अस्मिन् सरस्वतीमहाल् ग्रन्थालये विद्यमानासु चतसृषु मातृकासु मध्ये B. 4782 (D. 3754) संख्यातायां मातृकायां ग्रन्थकर्तृनाम "वागिन्द्रकविः" इति दृश्यते । B. 5010 (D. 3756) संख्यातायां मातृकायां ग्रन्थकर्तृनाम न लभ्यते । उपरितनमातृकाद्वयादितरस्मिन् मातृकाद्वये (B. 4783, B. 5009) कर्तृनाम "वादीन्द्रकविः" इत्येव दृश्यते । अतोऽत्र ग्रन्थकर्तृनाम "वादीन्द्रकविः" इत्येव स्वीकृतम् । मातृकाचतुष्टयेऽपि प्रतिपाद्यविषये न कोपि भेदः ।

एतद्ग्रन्थालयस्थमातृकासूचीपत्रे (षष्ठविभागे) (Descriptive Catalogue of The Sanskrit Manuscripts in the T. M. S. S. M. Library, Tanjore. Vol. VI) (D. 3753) B. 4783 संख्यातमातृकाविवरणप्रस्तावे चैवं दृश्यते —

Remarks:—The MS. is in good condition. The name of the author is given in this MS as Vādīndra and in the next MS. No. 3754 it is given as Vāgindra. The work brings together a number of words which can easily fit into verse composition. These phrases will be a valuble aid to any one who wishes to indulge in versification.

अस्य कवेः कालनिर्णयविषये कृतः प्रयत्नः निष्फलोऽभूत् । कदा कुत्रासीदित्यादि निर्णेतुं न पार्यते ।

महदिदन्तु प्रमोदस्थानं यदयं "कविकर्पटिका" ग्रन्थः (B. 5010) तीर्थयात्राप्रसङ्गेन काशीं गतेन श्रीमन्महाराजतञ्जापुराधीश्वर श्रीशरभेन्द्रभूमिपालेन (A. D. 1798-1832) एतद्ग्रन्थालयपरिपोषकाग्रगण्येन काश्यां परिक्रीतः । स चायमंशः ग्रन्थस्योपर्येवं लिखितस्सन्दृश्यते महाराष्ट्रभाषायाम् — 'हे पुस्तक श्रीमन्तराज श्रीशरभोजीमहाराजसाहेबयांच्या कारकर्तीत काशीदेशाहून खरीदी करून आणिलें असे' ॥

एवंविधोत्तमग्रन्थसङ्कलनेन सारस्वतजगतो महदुपकृतवतः श्रीमन्महाराजश्रीशरभेन्द्रभूपालस्य विषये हार्दीं कृतज्ञतामाविष्कुर्वन्त इतो विरमामः ॥

कविकर्पटिका सेयं कविवादीन्द्रनिर्मिता ।
मोदाय विदुषां नित्यं जीयादाचन्द्रतारकम् ॥

इति शम् ।

वि. सुन्दरशर्मा ।
नावल्पाक्कं श्री देवनाथाचार्यः ।

॥ श्रीगणेशाय नमः ॥

# ॥ कविकर्पटिका ॥

## श्रीवादीन्द्रकविविरचिता ।

——:❀:——

यः कातन्त्रसुधानिधानकलशस्साहित्यरत्नालय-
स्सानन्दस्फुटगद्यपद्यरचनाप्रागल्भ्यशब्दोदयः ।
षट्तर्कामृतपूरपूर्णवदनस्सद्बृन्दचन्द्रोदय-
स्तस्येयं कविकर्पटीकरचना कण्ठे प्रतिष्ठाप्यताम् ॥

यत्नादिमां कण्ठगतां विधाय श्रुतोपदेशाद्विदितोपदेशः ।
अज्ञातशब्दार्थविनिश्चयोऽपि श्लोकं करोत्येव सभासु शीघ्रम् ॥

आदौ तावदनुष्टुप्छन्दसा चन्द्रवर्णनमारभ्यते ॥

तत्र तावत्प्रथमपादे पञ्चाक्षरे — कर्पूरपूर, डिण्डीरपिण्ड, रजनीकर, शम्बूककण्ठ, गङ्गाप्रवाह, मृणालनाल, शङ्खसञ्चय, मल्लिकाचय, कैरवव्रात, चन्दनद्रव, नीहारहार, कैलासकाश, सुधासञ्चय, प्रालेयजाल, वर्षोपलौघ, कुन्दसन्दोह, स्फटिकोपल, शालितण्डुल, केतकीगर्भ, मल्लिकापुष्प, केतकीपत्र, कदलीसार, मृणालसूत्र, शरदम्भोद, नवनीतौघ, शुभ्रांशुद्युति, शुभ्राभ्रद्युति, सफरीचय । पुनस्तत्रैव पादे त्र्यक्षरे — नीकाशम्, सङ्काशम्, सम्प्रख्यम्, सदृशम्, तत्तुल्यम्, तुल्यश्रीः, संस्पर्धि, विध्वंसि, प्रमाथि, विद्वेषि, सम्पर्कि, सम्मर्दि ॥

द्वितीयपादे (द्व्यक्षरे) — कान्तिः, तेजः, दीप्तिः, प्रभा, द्युतिः, रोचिः, भानुः, रश्मिः, वपुः, शोभा, ज्योतिः एते । पुनः — यस्य, तस्य, कस्य, अस्य, स्वस्य, वर्णने । ततः (चतुरक्षरे) — प्रसाद्यते, प्रमीयते, विलोक्यते, प्रतीयते, प्रतीक्ष्यते, प्रणीयते, विराजते, प्रकाशते, निरीक्ष्यते ॥

तृतीये (पादे) — चन्द्रोऽयम्, घटोऽयं, सुमेघः, प्रसादः, मेघोऽयम्, सुवर्णः, पर्वतः, समीरः, समुद्रः, वारिजः, गजेन्द्रः, निशेशः, मृगांकः, क्षपेशः, नदीशः, पृथ्वीशः,

अचलः, श्वेतोऽयम्, शुक्रोऽयम्, सिंहोऽयम्, सारोऽयम्, शेषोऽयम्, बाणोऽयम्, **(पुनः पञ्चाक्षरे)**—राजते रम्यः, शोभते भद्रः, भासते भास्वान्, प्रेक्ष्यते भूयः, दृश्यते नूनम्, वीक्ष्यते लोकैः, ज्ञायते सर्वैः, राजते सम्यक् ॥

**चतुर्थपादे (त्र्यक्षरे)**—नितान्तम्, नियतम्, सर्वदा, सततम्, सुतराम्, प्रत्यक्षम्, साम्प्रतम्। **पुनः (पञ्चाक्षरे)**—लोचनप्रियः, कामिनीप्रियः, जनवल्लभः इत्यादि योज्यम् ॥

**पुनरनेनैव वृत्तेन किञ्चिद्वर्ण्यते**—

**प्रथमे (चरणे)**—पुण्यधामा, महाबुद्धिः, सर्वाश्रयः, सानुराग, निष्कलङ्क[1], दयासिन्धु, जगत्ख्यात, महावीर, सभासूरि, मित्रचन्द्र, दुष्टकाल[2]॥

**ततो द्वितीयपादे चतुरक्षरे**—पण्डितौघ, नित्याचार, वेदशास्त्र, श्रीवेदान्त, ज्ञानवन्त, धर्मशास्त्र, भविश्रेष्ठ। **पुनः**—निजाश्रमम्, निकेतनम्, स्वमन्दिरम्, निजालयम् ॥

**तृतीयपादे (त्र्यक्षरे)**—शोभते, राजते, जीवतात्, विभाति, तिष्ठति, गच्छति, दीव्यति, भासते । **पुनरत्रैव पञ्चाक्षरे**—रणसिंहोऽयम्, मञ्जुघोषोऽयम्, वासुदेवोऽसौ, रामदेवोऽयम्, राजराजोऽयम्, भव्यभावोऽयम्, वीरवीरोऽयम्[3] ॥

**चतुर्थपादे (त्र्यक्षरे)**—विश्रुतः, विख्यातः, प्रस्तुतः, प्रसिद्धः, कीर्तितः, प्रभूतः, यशस्वी, ज्ञानवान्, प्रकाशी, प्रश्रुतः। **पुनरत्रैव (पञ्चाक्षरे)**—पृथिवीतले, भुवनोदरे, सर्वदा क्षितौ, भूतले सदा, नियतं भुवि, सुतरां भुवि इत्यादि योज्यम् ॥

## अथ कृष्णवर्णना ॥

**प्रथमपादे**—यमुनानीर, कालिन्दीजल, नीलनीरद, नवजीमूत, [4]मषीसञ्चय, कामिनीकेश, भ्रमरश्रेणि, निर्वाणालात, घनसन्दोह, अतसीपुष्प, श्यामाङ्गीगात्र, कोकिलश्रेणि । पुनर्नीकाशादिसम्बन्धः ॥

---

'ख' मातृकागतोऽधिकपाठः—

1. निरामय-सहानुज-सलक्ष्मण-सर्वशास्त्र-साङ्गोपाङ्ग ।
2. कान्तालोक-कञ्जेक्षण-वारिजेश-वारांनिधि ।
3. भद्रपादोऽयं-भद्रजीवोऽयं । 4. तमालभूमि ।



## अथ लोहितवर्णना ॥

सिन्दूरपूर, बन्धूकपुष्प, रक्तचन्दन, किंशुकोत्कर, जपाकुसुम, मञ्जिष्ठराग, गैरिकद्रव, प्रवालजाल, दाडिमीबीज, तप्तकाञ्चन, बालार्कबिम्ब, इङ्गुदद्रव[1] । पुनर्नीकाशादिसम्बन्धः ॥

## अथ पीतवर्णना ॥

**प्रथमपादे**—सुवर्णवर्ण, मञ्जुकाञ्चन, कूष्माण्डपुष्प, [2]हरिद्राद्रव, कनकद्रव, गौरांगीगात्र, विद्युत्सञ्चय, शनप्रसून, कनकाम्भोज । अत्रापि पुनर्नीकाशादिसम्बन्धः ॥

### अतः परमनेनैव वृत्तेन देवद्विजगुरुवर्णनमारभ्यते ॥

**तत्र प्रथमपादे**—वासुदेव, महादेव, देवराज, महाकीर्ति, महाबुद्धि, विशुद्धात्मा, कृपायुक्त[3] । **पुनरत्रैव**—जयत्येष, विभात्येष, कृती नूनम्, महाप्राज्ञ, प्रसन्नात्मा ॥

**द्वितीयपादे**—[4]कृपया, धर्मेण, सुखेन, विद्यया, चक्षुषा, वपुषा, सुकृतैः, वेषेण, कलया । **पुनरत्रैव**—समलङ्कृतः, सुभगीकृतः, परिरक्षितः, परिशोभितः, गुरुमण्डितः, नन्दितस्सदा, धर्मरञ्जकः, परित्राणदः, विषयैषिणम् ॥

**ततस्तृतीयपादे त्र्यक्षरे**—आनन्दः, भुवनम्, सुकृतम्, सुनीति, सुमनः,[5] कीर्त्यते—दृश्यते—दीप्यते—येनेति । **पुनरत्रैव**—प्राप्यते येन, पाल्यते येन, दृश्यते नूनम्, दीप्यते देहः, नरके घोरे ॥

**चतुर्थपादे**—नितान्तम्, नियतम्, सततम्, सर्वदा, सुतरां, लोकानाम्, प्राणिनाम्, सुराणाम्, सर्वेषाम् । **पुनरत्रैव**—ननु निश्चितम्, खलु सर्वदा, समनन्तरम्, पृथिवीतले[6], विश्वमण्डले, क्षणमात्रतः, दर्शनादिह, दृष्टिमात्रतः, शशिसूरयोः ॥

---

1. अरुणोदय, श्रीसूर्योदय, विश्वोदयार्क, बिम्बार्कतनु, कुरङ्गनेत्र, शोणाचलेन्द्र, देवेन्द्रगोप, शुकेन्द्रचञ्चु, गौरांग्यधर, अश्वत्थांकुर, प्रवालपुष्प, मधुमत्ताक्ष इति 'ख' मातृकायां अधिकः पाठः ॥
2. हेमपङ्कज, कार्पासपुष्प, रजनीचूर्ण, निशापुष्पज, कुङ्कुमोत्कर, गौराङ्गीकुच, कमलाकुच, शुद्धहाटक इति 'ख' मातृकायां अधिकपाठः ।
3. द्विजराजः इति 'ख' मातृकायामधिकपाठः ।
4. मेधया-मुखेन-मनसा-धैर्येण-क्रमेण-शौर्येण—शीलेन इति 'ख' पाठः ।
5. शोभनः-संस्कृतः-सुन्दरः-सविता संवेत्ता-इति 'ख' मातृकापाठः ।
6. जगतीतले इति 'ख' पाठः ।

पुनरनेनैव वृत्तेन भण्यते—

चतुरक्षरे — महादेवं, वासुदेवं, वागीश्वरं, [1] योगीश्वरं, सानुनाथम् , देवदेवम् । पुनः— सदा वन्दे, सदा नौमि, सदा स्तौमि, चिरं नौमि, नमस्यामि, भृशं स्तौमि [2] ॥

द्वितीयपादे — कृपया, दयया, मेधया । पुनः— परिराजितः, परिशोभितः, परिमण्डितः, जनभासितः, जनरञ्जकः, द्योतिताक्षरः ॥

तृतीयपादे — — कलुषम् , कल्मषम् , [3] दुरितम् , तिमिरम् , सन्तोषः, सुरभिः, सुज्ञातः, सुजनः, सुकृतम् , सुतेजः, सुपदम् । पुनः — खण्डितं येन, क्रमितं येन, भ्रमितं येन, पाटितं येन, क्षेमितं येन, हन्यते येन, दीप्यते येन, नीयते येन, रम्यते येन, विभूतादरम् ॥

चतुर्थपादे — नीरदेन, वारिदेन, इन्द्रनीलैः[4], इन्दीवर । पुनः — समप्रभम् , प्रतिप्रभम् ॥

पुनरनेनैव वृत्तेन —

प्रथमपादे — प्रीतिमान् , प्रेमवान् , अहिंस्रः, सोदयः, प्रमोदः, उत्कर्षः । पुनः — सर्वसत्त्वेषु, सर्वलोकेषु, मित्रवर्ग्येषु, बन्धुवर्ग्येषु ॥

द्वितीयपादे — पुण्यकर्मणि, कर्महेतुषु, देवपूजादि, गुरुगौरव, सर्वसौहित्य । पुनः — तत्परः, निष्ठितः, लालसः, लम्पटः ॥

तृतीयपादे—रूपवानपि, बलवानपि, बुद्धिमानपि, सत्यवानपि, ज्ञानवानपि, शीलवानपि । पुनः — निर्लोभः, निष्णातः, निर्दम्भः, नम्रात्मा, सस्नेहः, सप्रेमः ॥

चतुर्थपादे — [5] सौख्ययुक्तः, शौर्यख्यातः, वीरश्रेष्ठः, गुणरत्नः । पुनः — महामतिः, गुणाकरः, तपोनिधिः इत्यादि योज्यम् ॥

अनेनैव वृत्तेन — प्रथमपादे — युक्तायुक्ते, हिताहित, गुणागुण, कार्याकार्य, देयादेय, क्षयाक्षय । पुनः — विवेकेन, विसेकेन, विशेषज्ञः, विभागज्ञः ॥

1. सिद्धेश्वरं-परेश्वरं-गुरुदेवं-गणेश्वरं-नागेश्वरं इति 'ख' मातृकापाठः ।
2. स्तौमि नित्यं इति 'ख' पाठः ।
3. दारिद्र्यं इति 'ख' पाठः ।
4. सद्विधानैः इति 'ख' पाठः ।
5. ख्यातवीर्यः, कृतकार्यः, हतशत्रुः, दारितारिः, महाप्राज्ञः, गुणागारः, तपोयोनिः, नरश्रेष्ठः, मनुजाग्र्यः, अग्रजन्मा, जातस्नेहः, सुशीलान्तः, स्वान्तचित्तः इति 'ख' पाठः ।



द्वितीयपादे — मुनिराजः, गुणधामा, व्रतिराजः, द्विजराजः, मित्रगोत्रः । पुनः — कृतादरः, कृतप्रियः, कृताश्रयः, प्रियंवदः, गुणप्रियः, [1] कृतास्थितिः ॥

तृतीयपादे — तेजस्वी, प्रतापी, दयालुः, [2] गुणज्ञः । पुनः पञ्चाक्षरे—रणधीरोऽयम् , राजराजोऽयम् , ब्रह्मदेवोऽयम् , कामपालोऽयम् , द्विजराजोऽयम् , शान्तदान्तोऽयम्, शुभकालोऽयम् , सोमदेवोऽयम् , भद्रकालोऽयम् , [3] देवदत्तोऽयम् ॥

चतुर्थपादे — सर्वदा, सुतराम् , सततम् । पुनः — परिराजते, परिशोभते, भुवि राजते, राजति क्षितौ, परिदृश्यते, गुणभूषणम् , धर्मसङ्ग्रहः ॥

पुनरनेनैव वृत्तेन भण्यते — नीलनीरज, नवजीमूत, अतसीपुष्प, [4] चन्द्रलांछन । पुनः — नीकाशं, सङ्काशं, तुल्यश्री, तुल्याभ, संस्पर्द्धि, सम्प्रख्य ॥

द्वितीयपादे — लोचना, प्रेक्षणा, वीक्षणा । पुनः — शशभृन्मुखी, मधुराधरा, शशिवन्मुखी ॥

पुनः तृतीयपादे — व्रजन्ती, तिष्ठन्ती, शयाना, आसीना । पुनः — सुरतागारम् , स्त्रीयमल्पाङ्गी, नवनारीयम् , सुन्दरी बाला ॥

चतुर्थपादे — चेतः, स्वान्तम् , मनः[5] । पुनः — उद्धरते, मोदयते, स्वीकुरुते, स्तम्भयते । पुनः — सदा, तव, मम, नृणामित्यादि योज्यम् ॥

पुनरनेनैव वृत्तेन (भण्यते) ॥

प्रथमपादे — सहोदर्यः, विशुद्धात्मा, समप्रज्ञः, समज्ञानः, समालोकः, सरिन्नाथः, महाभेद, महामोद, नदीनाथ, धराधार, पयस्तोम, जलस्रोत, पयोभार, जलजाल ॥

द्वितीयपादे — श्लाघनीय, महनीय, तुलनीय, दमनीय, रमणीय, गुणोत्कर्षः । पुनः— परिस्थितिः, परिक्रमः, पराक्रमः ॥

1. यतिराजः, यतिपूज्यः, मातुलेयः, भागिनेयः, अतनूजः, मारमूर्तिः इति 'ख' अधिकः पाठः ।
2. सदयः, श्रीहरिः, इति "ख" मातृकायामधिकः पाठः ।
3. मित्रवर्गोऽयं-सद्ब्राह्मणोऽयं-प्राणप्रियोऽयं-प्राणनाथोऽयं-इति 'ख' अधिकः पाठः ।
4. नीलाञ्जनेन - श्रीरञ्जनेन-स्वमन्दगत्या-गजेन्द्रगत्या - इति "ख" मातृकायामधिकः पाठः ।
5. बुद्धि - 'ख' अधिकः पाठः ।

**तृतीयपादे** — सर्वक्लेश, विश्वक्लेश, सर्वदोष । **पुनः** — विनिर्मुक्तः, परित्यक्तः, विहीनात्मा ॥

**चतुर्थपादे** — राजतेऽसौ, राजते यः, पातु वोऽयम्, चिरं जीयात् । **पुनः** — मुनीश्वरः, शिवापतिः, महेश्वरः, जनार्दनः इत्यादि योज्यम् ॥

इत्यनुष्टुप्छन्दः समाप्तम् ॥

**अधुना इन्द्रवज्रावृत्तेन भण्यते ॥**

तत्रादौ **प्रथमपादे** — दान, त्याग, पुण्य, धर्म, शील, शौर्य । **पुनः** — प्रसिद्धः, प्रमुक्तः, प्रलीनः, प्रगीतः, प्रशस्तः । पुनः — महनीयधामा, कमनीयसूत्रः, सततापनिद्रः, जगतां सुपूज्यः, चरतां दयालुः, कृपयाऽतिगूढः, दययाऽऽर्द्रचित्तः, भुवनैकबन्धुः, करुणाप्रधानः ॥

**द्वितीयपादे** — विद्याविशेषैः, यशोनुकूलैः, कीर्त्या सदस्यः, प्रजासु साधुः । **पुनः** — गुणवानधिश्रीः, कृपया प्रतीतः, स्वजनानुकूलः, गुणिनां गुणज्ञः, विदितो दयालुः, प्रथितः पृथिव्याम्, विदिताभिधानः ॥

**तृतीयपादे** — [1] युक्तः स्वदारैः, सुजातसख्यः, सदा प्रशस्तः, गाढातिगाढः, विद्याविलासैः, ख्यातः पृथिव्याम्, शास्त्रादिशिष्टः । **पुनः** — गुणगौरकान्तिः, रविकान्तिकान्तः, विनयादिसिन्धुः, स्मरतुल्यरूपः, मदनाङ्गयष्टिः [2] ॥

**चतुर्थपादे** — जीयाद्भवान्प्रीतिकरः, सुशोभसे त्वं सुजनः, वीरो भवान् ज्ञानवतां, रूपादयं शोभितवान्, भूपः प्रभुस्त्वं जगताम् । **पुनः** — प्रसिद्धः, विशुद्धः, महात्मा, महाधीः ॥

**पुनरन्यप्रकारेण भण्यते ॥**

**प्रथमपादे** — सदैव, रराज, विभाति, प्रतीत, प्रभाव, विनाम । **पुनः** — दानी, मानी, विद्वान् । पुनः — सुकृती जनानाम्, गुणिनां गरीयान्, व्रतिनां महात्मा ॥

**द्वितीयपादे** — धर्मप्रभावैः, कीर्त्या विशुद्धैः, शुद्धो यशोभिः, तुल्योंगनाभिः । **पुनः** — परिराजमानः, परिशोभमानः, परिभूषितो यः, सुचिरं समेतः, महतां महीयान् ॥

1. श्रीविष्णुदासः, श्रीचन्दनश्रीः, श्रीकीर्तियुक्तः – इति "ख" अधिकः पाठः ।
2. चतुरांगयष्टिः इति "ख" पुस्तके अधिकः पाठः ।



**तृतीयपादे षडक्षरे** — विनाशितं येन, विपाटितं येन, विखंडितं येन । **पुनः** — समस्तदैन्यम्, सदारिचक्रम्, पुरोरिशौर्यम्, द्विषां कदम्बम् ॥

**चतुर्थपादे** — नीलारविन्दैः, पयोधरौघैः, मेघप्रतानैः, कलापिवारैः । **पुनः** — सदृशप्रशस्तः, सदृशस्सदैव, सुतरां समानः, प्रतितुल्यमूर्तिः, समदीप्तियुक्तः इत्यादि योज्यम् ॥

( इतीन्द्रवज्रा )

**इदानीं वंशस्थवृत्तेन किंचिद्भण्यते ॥**

**तत्र प्रथमपादे** — प्रफुल्लनीलोत्पल, अनिन्दितेन्दीवर[1] । **पुनः** — लोललोचना, चारुलोचना, मञ्जुलेक्षणा ॥

**द्वितीयपादे** — बन्धुप्रतिद्वन्द्वि, विडम्बचन्द्राभ, शशिप्रतीकाश । **पुनः** — मुखाम्बुजद्युतिः, शुभास्यपङ्कजा, चकोरलोचना[2] ॥

**तृतीयपादे** — शिरीषपुष्पप्रभ, मृणालनालोपम, शिरीषमालासम । **पुनरत्रैव** — देहमार्दवा, कोमलच्छविः, बाहुवल्लरी ॥

**चतुर्थपादे** — जगन्मनः, मनो नृणाम्, जगत्त्रयम्, (पुनरत्रैव — [3] मोहयते, रञ्जयते) । **पुनरत्रैव** — नितम्बिनी, विलासिनी, कलावती ॥

**पुनरनेनैव वृत्तेन — (प्रथमपादे)** — सुजातपद्मच्छद, विकासिपद्मोत्तम । **पुनः** — लोललोचनः, चारुलोचनः, मञ्जुलेक्षणः ॥

**द्वितीयपादे** — निशाकरस्पर्धि, सरोरुहच्छाय । **पुनः** — परिस्फुरन्मुख, लसन्मुखच्छवि, मुखप्रकाशवान् ॥

**तृतीयपादे** — समुच्चतेन्द्रध्वज, करीन्द्रहस्तोपम । **पुनः** — शोभिदोर्लतः, वीर्यवद्भुजः, बाहुदुःसहः ॥

**चतुर्थपादे** — जयत्यसौ, चकास्त्ययम्, विराजते । **पुनः** — कीर्तिभरैः, सर्वगुणैः । **पुनरत्र** — अलङ्कृतः, अनुद्रुतः, इत्यादि योज्यम् ॥

1. प्रकाशशोणोत्पल – (ख) पाठः । 2. विलोललोचना – (ख) पाठः । 3. मोदयते ।

अधुना द्रुतविलम्बितं (वृत्तम्) ॥

तत्र प्रथमपादे — विकचकैरवसञ्चय, विशदशारदवारिद, सितसरोजवरव्रज । पुनः— सोदरम्, सन्निभम्, भास्वरम्, दीप्तिमत ॥

द्वितीयपादे— चरति, लसति, किरति, सरति, मिलति, जयति । पुनः— यस्य, तस्य, कस्य इत्यादि । पुनः— यशः, महः, विभा, गुणः । पुनः— भुवनत्रये, पृथिवीतले, भुवनोदरे ॥

तृतीयपादे— सकलवत्सलता, निखिलशिल्पकला । पुनः— मिलनक्षमः, क्रममन्दिरम् ॥

चतुर्थपादे— पतिरसौ, क्षितिपतिः, हिमरुचिः । पुनः— स पुरः परिदृश्यते, स सदा भुवि शोभते इत्यादि योज्यम् ॥

(इति द्रुतविलम्बितम्)

अधुना वसन्ततिलकं वदामि ॥

प्रथमपादे— शोभासमुद्रसुभगः, विद्वज्जनैः परिवृतः, सर्वाङ्गसुन्दरवपुः, वेदान्तशास्त्रनिरतः, विद्याविनोदरसिकः । पुनः— जगतीतलेऽस्मिन्, जगतो विधाता, परितश्च कर्ता, भुवने निकामम् ॥

द्वितीयपादे— प्रालेयजालसरसा, नीहारपाटनरुचा, स्फाराभ्रबिन्दुनिवहैः, शीतांशुदीधितिगुणैः, वर्षोपलौघनिवहैः, काशप्रकाशनिकरैः, मल्लीप्रसूननिचयैः, कैलासकाशविमलैः, श्रीखण्डपिण्डविशदैः, संघृष्टचन्दनचयैः, काशप्रकाशविसरैः । पुनः— प्रतिभाति चन्द्रः, भुवने विभाति, परिराजतेऽयम्, जलदप्रतीपः, प्रतिभाति भीमः ॥

* (तृतीये चरणे — एकान्तकान्तविधिना, स्वाचारदाननिरतः, यः स्वांतसद्मनिकटे । पुनः— प्रतिमः पुराणः, मम देहि सत्यं ॥

चतुर्थचरणे — लोकेशदेविसहितः, वारीशवाणिविभवैः । पुनः — गृहमागतोऽस्ति, सखि मेऽद्य दृष्टः, प्रतिभाति मेघः, सुरलोकवेत्ता) इत्यादि योज्यम् ॥

पुनरनेनैव (वृत्तेन) कृष्णवर्णनम् ॥

* धनुश्चिन्हान्तर्गतो भागः (ख) मातृकास्थः ।



नीलीसमूहविभवैः, स्फूर्यत्कपाटकुशलैः, अम्भोधरद्युतिचयैः, इन्दीवरस्फुटरुचा, कादम्बिनीरुचिचयैः । पुनः — सदृशो विभाति, समतामुपैति, सदृशत्वमेति ॥

पुना रक्तवर्णना — बन्धूकपुष्पनिकरैः, दात्यूहलोचनचयैः, सन्ध्याप्रकाशविसरैः, लाक्षारसैरभिनवैः, माञ्जिष्ठरागपटलैः । पुनः — सदृशादिसम्बन्धः ॥

पुनरनेन पीतवर्णना — चामीकरस्फुटरुचा, जाम्बूनदस्य महसा, चामीकरद्युतिमुखा, विद्युत्प्रभाभिरभितः, उद्भासुरार्ककिरणैः, उद्भासिचम्पकचयैः । पुनः — सदृशादिसम्बन्धः ॥

पुनरनेन वृत्तेन भण्यते । तत्र प्रथमपादे — संसारसागर, दुःखैकवारिधि । पुनः — समुत्तरणेषु, विलङ्घनकर्म, सुखास्थितपोत, निवर्तनधर्म । पुनः — दक्षः, रूपः, योग्यः ॥

द्वितीयपादे — लोकेषु कीर्तिसमुपार्जन, सर्वप्रजासु भगवान्, श्रेयोभिलाषपरिपालन, लक्ष्मीविलाससुभगीकृत, सम्पत्तिसंचयवशीकृत । पुनः — कामुकोयं, भक्तिनम्रः, भक्तिनेयः, भक्तिगम्यः, सर्वगात्रः* ॥

तृतीयपादे — निश्शेषदेवपरिपूजित, देवासुरादिजनवन्दित, देवेन्द्रमौलिपरिशोभित, देवादिमौलिमणिशोभित, सद्योविकासिकमलोद्यम । पुनः — पादयुग्मः, पादपीठः, पत्सरोजः, पादपद्मः ॥

चतुर्थपादे— भद्रं करोतु भवतामिह, सम्यक्करोतु कुशलं तव, श्रेयो विलोकयतु सम्प्रति, भद्रं ददातु नितरां त्वयि, दूरीकरोतु दुरितं तव, पापक्षयं वितनुतां तव । पुनः— वासुदेवः, पद्मनाभः, रामदेवः, रामभद्रः, नीलकण्ठः, चन्द्रमौलिः, मञ्जुघोषः, वित्तनाथः, राजराजः ॥

(इति वसन्ततिलकम्)

अधुना मालिनीछन्दः ॥

तत्र प्रथमपादे— नवसरसिजजालैः, विकचकुसुमसङ्घैः, शशधरकरवारैः, नवनलिनवितानैः, विकसितनवपद्मैः, सरसिजसमुदायैः, मलयजरसजालैः । पुनः— सन्निभालोक एषः,

* भक्तमेयः (ख) पाठः ।

सन्निभोऽयं सदैव, सर्वदा तुल्यकान्तिः, सर्वदेवोपमेयः, तुल्यरूपप्रकाशः, सन्ततं तस्य मूर्तिः, निर्भरोद्भासिरूपः ॥

द्वितीयपादे— प्रसरति करवालः, स्फुरति किरणराशिः जयति किरणराशिः । यस्य, तस्य इत्यादि योज्यम् । पुनः—– रम्यः प्रकामम् , रम्यो निकामम् , संश्लाघनीयः, सम्प्रेक्षणीयः ॥

तृतीयपादे— ([1] जनपतिरुचिरौघैः, प्रसरति रतिजालं, रतिमिह तनुतेत्र । पुनः—–) भास्करोऽयं पुरस्तात् , वारिवाहो महीयान[2] ॥

चतुर्थपादे— कृततिमिरनिरासः, दधदुदयविनोदः, सुभगवचनरम्यः, बहुमालिन-विनाशः, मुनिवचनविनोदी । पुनः —– निर्मितोऽयं विधात्रा, सर्वलोकानुरागी, सज्जनस्योपकारी, प्राणिनां कर्मदक्षः, दीप्यमानः पृथिव्याम् , माननीयो जगत्याम् इत्यादि योज्यम् ॥

पुनरनेनैव (वृत्तेन) । प्रथमपादे—– नवजलधरजालैः, अभिनवघनजालैः, समरगज-घटाभिः, कुवलयदलजालैः, पिककुलतरलौघैः । पुनः— सन्निभादिसम्बन्धः । पुनः —– कनक-निवहभासा, रुचिरकनकजालैः, शतकुसुमसमूहैः, बहुतरहरितालैः । पुनः— संनिभादिसम्बन्धः ॥

सर्वत्र चतुर्थपादे—– प्रसरति भुवि नित्यं, स जयति भुवि नित्यं, हरति दुरितराशिं, धरति भुवनमेकः, स्फुरति जगति दानैः । पुनः—– सर्वदा दुर्निवारः, चन्द्रबिम्बस्वरूपः, वैरि-कान्ताकृतान्तः, कामिनीगीतकीर्तिः, भाति लोके सदैव (इत्यादि योज्यम् । )

इति मालिनीच्छन्दस्समाप्तम् ॥

अथ शिखरिणीछन्दः ॥

प्रथमपादे — महाशीलः श्लाघ्यः, कलानामाधारः, कलाशिक्षाभिज्ञः, विशालोऽयं धीमान् , क्षमाशीलोपेतः, सदा तर्कोयुक्तः, प्रशस्ताभिप्रायः । पुनः— प्रथिततरुणः, मदनविजयी, रतिपति-समः, विनयसहितः, जननसुकृतः, हिमकरमखः, स्मरसमवपुः, हरिनिभमहाः । पुनः — निर्मलयशाः, प्रीतिसहितः, पङ्कजमुखः, सुन्दरगुणः, पण्डितमतिः, पावनवपुः, शक्रसदृशः ॥

द्वितीयपादे —परार्थस्सर्वेषां, स्फुरल्लोलाक्षेपः, रिपूणां तेजस्वी, सदा श्वेताकारः पुनः — विगतकलुषः, गलितदुरितः, हृतमदबलः, हरिसमरुचिः, जनपदमतः । पुनः — सद्गुणरतः, वीरसहितः, निर्मलरुचिः, गौरवदनः तत्त्वनिपुणः, चारुवदनः ॥

1. कुंडलीकृतो भागः 'ख' मातृकायां । 2. यामिनीनाथ एषः 'ख' मातृकायां ।



तृतीयपादे —–निवासश्शूराणां, रिपूणां विश्रम्यः, प्रशस्यस्सर्वेषां, प्रसूतिः पुण्यानां । पुनः —द्विजवरनतः, जलनिधिसमः, कमलवदनः, सुखजितवपुः । पुनः —–वीररुचिरः, वीरसुभगः, कोकिलवचाः, वारणगतिः, युक्तिसरलः, दानसहितः, सत्पथरतः, सत्यनिरतः ॥

चतुर्थपादे— कुबेरप्रायोऽयं, प्रसिद्धः प्रज्ञाभिः, स्फुरत्काव्यावासः, महाशास्त्राभिज्ञः, सदाराध्यो नृणां । पुनः –नरपतिरयं, धनपतिरसौ, द्विजकुलगतिः, प्रकटितयशाः, विनयसहितः । पुनः— भाति नियतं, दुस्सहमहाः, साधुवसतिः, सज्जनगृहं, सभ्यचरितः (इत्यादि योज्यम्) ॥

पुनरनेनैव (वृत्तेन) । प्रथमपादे— गुणिग्रामाभोग्यः, गतोपि प्रख्यातः, जगद्गण्यो धीभिः, जनस्तुत्याचारः, प्रसिद्धो लोकेऽस्मिन् , महाप्रज्ञायुक्तः, सदा शीलश्लाघ्यः, कलाना-माधारः, क्षमाशीलोपेतः । पुनः—– स्मरसमवपुः, नरपतिसमः, कमलवदनः, मनसिजनिभः, सुभगवदनः । पुनः—– निर्मलयशाः, कीर्तिनिलयः, विश्रुतयशाः, कीर्तिदयितः, प्रेमनिलयः, स्नेहभवनम् ॥

द्वितीयपादे—– हतद्वेषिव्रातः, क्षुधारोषव्याधः, द्विषत्क्रोधच्छेदी, यतिव्रातप्रीतः । (पुनः–) विगतकलुषः, दलितदुरितः, दलितसुकृतः, विनयसहितः, मदनविजयी, हतमदबलः, शतमखसमः । पुनः—–पण्डितमतिः, गौरवदनः नीतिनिपुणः, तत्त्वनिपुणः, शास्त्रसहितः, कार्यकुशलः, शुद्धहृदयः ॥

तृतीयपादे—– शिशुक्रीडाधीरः, महाधर्मस्थानं, गृहं पुण्यौघानां, सुखोत्पादक्षेत्रं । पुनः—– शतमखसमः, सुरसममतिः, मृगपतिगतिः, जनधृतिनिधिः, परभृतवचाः, गुरुजनमतः, द्विज-कुलनतः । पुनः— शुद्धचरितः, चारुवदनः, विश्रुतवचाः, दानसहितः, शत्रुदमनः ॥

चतुर्थपादे—– भवान् जीयात्कल्पं, सुदीर्घं जीयास्त्वं, भवान् जैत्रो भूयात्, जय त्वं निरशङ्कः । पुनः— धनपतिपरिस्पर्धिविभवः, गुणिजनसुखोद्भासिमहिमा, गुरुतररिपून्मूलनकरः, गुणिगणमतः सर्वविजयी इत्यादि योज्यम् ॥

इति शिखरिणीच्छन्दः ॥

अथ मन्दाक्रान्ता ॥

तत्रादौ प्रथमपादे —–क्षान्तिप्राप्तः, प्राप्तक्षान्तिः, प्रज्ञागण्यः, पुण्यप्रज्ञः, स्तुत्याचारः, शीलश्लाघ्यः । पुनः—– स्मरसमवपुः, रतिपतिनिभः, कमलवदनः, गुणनिधिरयम् , नरपतिसमः,

सुभगवदनः, शुभ्रनिजगृहः । पुनः — क्षीरसङ्काशकीर्तिः, कीर्तिधौतान्तरिक्षः, कीर्तिधौतत्रिलोकः, कीर्तिधौतैककामी, वेश्मविक्रान्तकीर्तिः, सज्जनानन्दकन्दः ॥

द्वितीयपादे— विश्वप्रेक्ष्यः, मानोन्माथी, वीरोच्छेदी, योगाभ्यासः, चन्द्रज्योत्स्ना । पुनः— गलितकलुषः, गलितदुरितः, जनितसुकृतः, विनयसहितः, मदनविजयी, जितरणवपुः, अविगतयशाः । पुनः— सम्मतः पण्डितानाम् , धीमतां धीसुधीरः, चारुचारित्रचन्द्रः, नीतिशास्त्रैकवेत्ता, सर्वशास्त्रैकवेदी ॥

तृतीयपादे— धर्मासारः, सम्यक्स्तुत्यः, पुण्यप्रायः, पुण्यो धन्यः, पुण्यारण्यः, सौख्याचारः, लक्ष्मीमित्रम् । पुनः— बहुमतगतिः, भुवनविजितः, क्षयितकलुषः, कृतजनसुखः, प्रकृतिसुभगः, स्थितजनमनाः । पुनः— सर्वदा मूर्धमूर्धा, सर्वदोद्भूतभूतिः, चारुलब्धप्रतिष्ठः, [1]सुस्वभावानुभावः, युक्तमेषो रसज्ञः, शुद्धधैर्यैकसिन्धुः, सुष्ठु लब्धप्रतिष्ठः ॥

चतुर्थपादे— दीर्घं जीयात , चारुर्भूयात् , सौख्यैस्सेव्यः, कीर्त्या व्याप्तः, बन्धुप्रेमा, सद्भिः पूज्यः । पुनः— धनपतिसमः, दशरथसमः, मुनिजनसमः, हिमगिरिनिभः, बलरिपुसमः, गुणगणनिधिः । पुनः— देवचन्द्राभिधेयः, विश्ववागीश्वरश्रीः, वासुदेवस्वरूपः, देवगोविन्दचन्द्रः, बालको वासुदेवः इत्यादि योज्यम् ॥

पुनरनेन (वृत्तेन) प्रथमपादे— धर्माचारः, पुण्याचारः, तथ्याचारः, चन्द्रप्रख्यः, दिव्याकारः, देवप्रख्यः । पुनः— पशुपतिसमः, गुणिगणमतः, बहुजनमतः, हरिहरनिभः, निहितदुरितः, सुविहितमतिः[2] कमलवदनः, निपुणतरधीः, सुविमलमनाः, नलिननयनः । पुनः— सर्वदा सेवनीयः, वन्दनीयो जनानाम् , विद्यया देवकल्पः, वारिराशिप्रकाशः, सिन्धुसारोपमेयः, निर्जितारातिचक्रः, निर्जिताशेषवादी, पण्डितोऽयं महीयान् , वन्दिभिस्सेव्यमानः, धीमतामग्रगण्यः ॥

द्वितीयपादे— ख्यातः क्षान्त्या, त्यक्तः पापैः, युक्तिख्यातः, विश्वस्तोऽयं, प्रीत्या युक्तः, साधुश्लाघ्यः, उद्यत्तेजाः । पुनः— विनयसहितः, गुणिगणरतः, सुमतिनिलयः, प्रहृतकलुषः, हतरिपुजनः, पृथुजययुतः । पुनः— चारुचामीकरश्रीः, चन्द्रकर्पूरकीर्तिः, शुद्धगीतप्रभावः, काव्यजातौ विधिज्ञः, कामिनीचित्तहारी, यामिनीनाथकल्पः, भास्वता तुल्यकान्तिः, देवदेवावतारः, धर्मविद्याविशुद्धः ॥

1. शुभ्रभावानुभावः ‘ख’ पाठः । 2. शुचिहितमतः ‘ख’ पाठः ।



तृतीयपादे— राज्ञः स्वामी, श्रेयोवासः, संख्यातोऽयम् , कालश्शक्तौ, शूरः श्रेयान् , विद्वान् सद्यः, प्रज्ञावासः, * सत्याचारः । पुनः— शशिसममुखः, विधुसममुखः, सुकृतसहितः, जितजिनचरः, व्रतकृशवपुः, हरिहरमहान् , सकलगुणवान् , सुभगवदनः । पुनः— कार्यशीलो विशालः, सर्वविद्याभिरामः, पञ्चबाणोपमेयः, व्यक्तकन्दर्पकान्तिः, पञ्चकागारगौरः, द्वेषिणां दुस्सहार्थः ॥

चतुर्थपादे— लक्ष्मीयुक्तः, मायाहीनः, भास्वान् भासा, ख्यातः कीर्त्या, प्रज्ञायुक्तः । पुनः— विनयसहितः, निपुणतरधीः, मनसिजसमः, शशिनिभरुचिः, शशधरनिभः, रुचिरवदनः, ललितगमनः, सुकृतिसदयः, सरसिजमुखः । पुनः— राजते शुद्धसेतुः, प्रेक्ष्यते पण्डितौघैः, बाणवाणीविनोदी, सर्वदा शुद्धधर्मः, सेव्यमानो महद्भिः, वन्द्यमानस्सुधीभिः, चन्द्रविस्फारलक्ष्मीः, रम्यराजीवनेत्रः, सर्वलोकोपकारी (इत्यादि योज्यम् ॥ )

## अथ शार्दूलविक्रीडितम् ॥

तत्र प्रथमपादे— संख्यातो गुणशालिनां गुणमयः, शास्त्राणामयमेक एव कुशलः, प्रज्ञानां निजभूमिरेष नियतं, सर्वेषां गुणशालिनामतिमहान् । पुनः— कर्मप्रधानोन्नतिः, संरक्तचित्तो जने ॥

द्वितीयपादे— चन्द्राकारगुणप्रकाशसुभगः, दुर्वारारिघटाविघट्टनपटुः, यः काव्ये गणितो महाकविजनैः, लोकानामुपकारकः प्रतिदिनं । पुनः— प्रज्ञावतामग्रणीः, दानेन कर्णोपमः, प्राणैरयं सुस्वरः, नित्यं गुणैः संयुतः ॥

तृतीयपादे — स्फूर्यत्कुन्दसमूहनिर्मलयशाः, कीर्त्योल्लंघितसप्तवारिधिपयः, प्रज्ञाभिर्गुरुसन्निभो गुणवतां । पुनः — विद्याविनोदी स्वयम् , श्रीमान् प्रशस्यो गुणैः, पुण्यात्मनामग्रणीः ॥

चतुर्थपादे — तर्कोदर्कविशुद्धशुद्धचरितः, श्रेयान् सर्वजनेषु निर्मलमतिः, शक्त्या निर्जितसारशत्रुनिवहः । पुनः — वागीश्वरोऽयं नृपः, श्रीभीमदेवो नृपः, जीयादयं भूपतिः, भीमोऽयमालोक्यताम् , विज्ञानपारायणः, विद्वानयं राजते (इत्यादि योज्यम् ॥

इति श्रीवादीन्द्रकविविरचिता
**कविकर्पटीकरचना**
समाप्ता ॥
श्री कृष्णार्पणमस्तु ॥

* प्रीत्याचार: ‘ख’ पाठः

# மதிப்புரை.

**நயனரோக சிகித்ஸாதீபம்**

ஆசிரியர்

திரு டி. எஸ். அம்ருதலிங்கம் பிள்ளை
அவர்கள்.

பதிப்பாசிரியர்

Dr. S. வெங்கடராஜன், L.I.M. (Regd)
கெ. 1969 ஸகாநாயக்கன் தெரு, தஞ்சாவூர்.
பக்கங்கள் 32 விலை ரூ. 0—8—0

இந்நூல், பதிப்பாசிரியரால் அன்புடன் அளிக்கப்பட்டு வரப்பெற்றோம். "ஸர்வேந்த்ரியாணும் நயனம் ப்ரதானம்" என்பது பழமொழி. 'ஐம்பொறிகளுக்குள் கண்' முக்கியமானது என்பது அதன் பொருள். இதை நன்கு காப்பாற்றிவைத்துக் கொள்வதற்கு இன்றியமையாதனவாகிய பல முறைகளையும் ஆன்றோர் அழகாக எடுத்துரைத்துள்ளனர். மேலும் "கண்ணோய்" முதலியன வருவதற்கான காரணங்களையும் அவைகளை அகற்றுவதற்கான மருந்து வகைகளையும் அவர்கள் பரிவுடன் எளிய தமிழ்ப் பாட்டுக்களில் அமைத்துப் பாடியுள்ளார்கள். இத்துறையில் பழைய தஞ்சை அரண்மனை வைத்யர்களுள் முக்கியஸ்தராகிய இந்நூலாசிரியர் பரம்பரையாக ஒப்புயர்வற்ற அனுபவம் வாய்ந்தவர் என்பது யாவருமறிந்ததே. தற்போது முதுமைப்பருவத்திலிருக்கும் அன்னாருடைய அரிய அனுபவம் பிற்காலத்தவருக்கும் கிடைக்குமாறு, நமது தஞ்சை ஸரஸ்வதி மஹால் வைத்யர் திரு. Dr. S வெங்கடராஜன் அவர்கள் (இந்நூலின் பதிப்பாசிரியர்) ஷியாரை அணுகி, பல வருஷங்கள் சீடராக இருந்து அவருடைய உயரிய முறைகளை நன்கு கற்றதுடன் அன்னாரால் மனமுவந்து அளிக்கப்பட்ட செயற்கரிய பல மருந்துக்களையும் வைத்துக் கொண்டு எல்லோருக்கும் "கண்ணைக்கொடுத்து" வருவது மிகவும் ஸந்தோஷப்படவேண்டிய செய்தியாகும்.

இந்நூலில் அகஸ்தியர் அருளிய நயன விதியிலிருந்து மிகவும் முக்கியமான சுமார் 30 பாடல்கள் ஆசிரியரின் அரிய தெளிவான உரையுடன் விளக்கப்பட்டுள்ளன. முதலில் உள்ள 8 பாட்டுக்கள் கண்ணுக்கு வியாதிகள் வருவதற்கான காரணங்களை விளக்கமாகக்கூறி அதன் மூலம் அவை வாராமல் காத்துக்கொள்வதற்குச் சிறந்த வழிகாட்டியாயமைந்துள்ளன. இந்த 8 பாட்டுக்களை யாவரும் மனப்பாடம் செய்து வைத்துக்கொள்வது மிக மிக அவசியம். பிறகு பலவகைப்பட்ட கண் வியாதிகளும் அவைகளுக்கான மருந்து வகைகளும் விளக்கப்படுகின்றன. முடிவில் ஔஷதப்பிரகரணம் என்னும் பெயருடன் மருந்துகள் செய்யும் விதங்களும் விவரிக்கப்பட்டுள்ளன. அவசியமான இடங்களில் பதிப்பாசிரியர் ஆங்கிலச் சொற்களையும் கொடுத்து உதவியுள்ளார். உரை நடை மிக எளிது. மிகவும் உபயோகமான பதிப்பு. அன்பர்கள் யாவரும் ஆர்வத்துடன் வாங்கிப்படித்துப் பயன் பெறவேண்டுமென்பது எமது அவா.

தஞ்சாவூர்
16—9—54

காவல்பாக்கம்,
ஸ்ரீ தேவநாதாசாரியர்
வித்வான
ஸரஸ்வதிமஹால் நூல் நிலையம்

---